श्रीः ॥

# पुरश्चरणदीपिका ।

श्रीमत्पण्डितकाशिनाथभट्टविरचिता ।



खेमराज श्रीकृष्णदास
प्रकाशन
बम्बई

# अथ पुरश्चरणदीपिका ।



अस्मिन् ग्रन्थे पुरश्चरणसम्बन्धि-गुरुशिष्यासन माला-देशकाल-जपहवना-

दीनामुत्तमतया विचारोऽस्ति ॥

श्रीदक्षिणामूर्तिगुरुभ्योनमः ॥ गुरुशिष्यलक्षणम्—
कामेश्वरपदद्वंद्वं निधाय हृदि सुन्दरम् । काशीनाथः प्रत-नुते पुरश्चरणदीपिकाम् ॥ तत्रादौ गुरुशिष्ययोः परीक्षा प्रोच्यते मया । गुरुशिष्यावुभौ मोहादपरीक्ष्य परस्परम् ॥ उपदेशं ददद्गृह्णन् प्राप्नुयातां पिशाचताम् । अज्ञः क्रियोपदेशं तु यो गृह्णाति ददाति च ॥ भुञ्जाते तावुभौ घोरान्नरकानेकविंशतिम् । अनर्हे मंत्रविज्ञानं न तिष्ठति कदाचन ॥ तस्मात्परीक्ष्य वक्तव्यमन्यथा निष्फलं भवेत् । यः स्नेहभयलोभाद्यैरयोग्यं यदि दीक्षयेत् ॥ देवताशाप-माप्नोति कृतं च निष्फलं भवेत् । ज्ञानेन क्रियया वापि गुरुः शिष्यं परीक्षयेत् ॥ संवत्सरं तदर्धं वा तदर्धं वा प्रय-त्नतः । शिष्योऽपि लक्षणैरेतैः कुर्याद्गुरुपरीक्षणम् ॥ आनंदाद्यैर्जपैः स्तोत्रैर्ध्यानहोमार्चनादिषु । ज्ञानोपदेश-

सामर्थ्यं मंत्रशुद्धिमपीश्वरि ॥ बोधकत्वं च विज्ञाय शिष्यो भूयान्न चान्यथा॥ कुलार्णवे—श्रीगुरुः परमेशानि शुद्धवेषो मनोहरः। सर्वलक्षणसंपन्नः सर्वावयवशोभितः ॥ अग्रगण्यो गम्भीरश्च पात्रापात्रविशेषवित्। शिवविष्णुसमः साधुर्न च दर्शनदूषकः॥ नित्ये नैमित्तिके काम्ये रतः कर्मण्यानिंदिते। यदृच्छालाभसंतुष्टो गुणदोषविभेदकः ॥ इत्यादिलक्षणोपेतः श्रीगुरुः कथितः प्रिये। अत्रिनेत्रः शिवः साक्षादचतुर्बाहुरच्युतः ॥ अचतुर्वदनो ब्रह्मा श्रीगुरुः कथितः प्रिये॥ निंद्यगुरुमाह क्रियासारे—श्वित्री चैव गलत्कुष्ठी नेत्ररोगी च वामनः ॥ कुनखी श्यावदंतश्च स्त्रीजितो ह्यधिकाङ्गकः। हीनाङ्गः कपटी रोगी बह्वाशी बहुजल्पकः। एतैर्दोषैर्विहीनो यः स गुरुः शिष्यसंमतः॥ आगमे—गुरुर्गृहस्थ एवैको न कदाचित् यतिर्गुरुः। केवलकामिपरोऽयं नियमः ॥ तथा च सूतसंहितायाम्—उत्तमः पंचधा प्रोक्तो गुरुर्ब्रह्मसुवेदिभिः। ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ॥ अतिवर्णाश्रमी चेति

क्रमाच्छ्रेष्ठो विचक्षणः॥ ज्ञानार्णवे—निंदितस्तु पितुर्मंत्र-स्तथा मातामहस्य च । सोदरस्य कनिष्ठस्य वैरिपक्षा-श्रितस्य च ॥ ननु ‘ स्त्रीदत्ते स्वप्नलब्धे च सिद्धादीन्नैव शोधयेत्’ इत्यनेन स्त्रीणामपि आचार्यत्वं प्राप्तम्। सत्यम्, किंतु स्वप्नवदेवाज्ञानात्स्त्रीतः प्राप्तस्तद्विषयमिदं वचःस्त्री-शूद्राणां साक्षात् आचार्यत्वनिषेधात् ॥ तथा चोक्तम्—स्त्रियः शूद्रादयश्चापि बोधयेयुर्हिताहितम्। यथार्हं माननी-याश्च नार्हन्त्याचार्यतां क्वचित् ॥ शूद्रान्नं शूद्रसंपर्कः शूद्रे-णैव सहासनम् । शूद्राज्ज्ञानागमः कश्चिज्ज्वलन्तमपि पातयेत् ॥ सूतसंहितायामपि—शूद्राणां च तथा स्त्रीणां गुरुत्वं न कदाचन। इति शिवः॥ योग्यमाद्यं गुरुं त्यक्त्वा शिष्यः शूद्रं क्रियाविदम्। गुरुं समाश्रयेदन्यं यः प्रयाति स दुर्गतिम् ॥ इति गुरुपरीक्षा ॥ नारदतन्त्रे—नास्ति-कान्भिन्नमर्यादान् कृतघ्नान्वेदनिंदकान् । मंत्राक्षरोपदेशे तु दूरतः परिवर्जयेत्॥ सनत्कुमारश्च—न देयमर्थलुब्धाय पिशुनायास्थिराय च । भक्तिश्रद्धाविहीनाय शुश्रूषा-

विमुखाय च ॥ अर्णवे--दासस्य शिवभक्तस्य हितप्रिय-
करस्य च । शूद्रस्यापि प्रदातव्यं नमोऽन्तं प्रणवं विना ॥
प्रणवेन विना मंत्रः स्त्रीशूद्राणां प्रसाधकः । प्रणवेन समा-
युक्तस्तयोर्देवि विषोपमः ॥ आगमेपि--स्वाहाप्रणवसं-
युक्तं मंत्रं शूद्रे ददद्द्विजः । शूद्रश्चण्डालतामेति विप्रःशूद्र-
त्वमेव हि ॥ अर्णवे--अमात्यदोषो राजानं भार्यादोषः
पतिं यथा । तथा शिष्यकृतो दोषो गुरुं प्राप्नोत्यसंश-
यम् ॥ तस्माच्छिष्यं गुरुर्नित्यं परीक्ष्यैव परिग्रहेत् ॥

इतिपुरश्चरणदीपिकायां गुरुशिष्यपरीक्षाख्यः
प्रथमः प्रकाशः ॥ १ ॥

---

दीक्षाविधिः । तत्रादौ मासनिर्णयः--वैशाखे श्रावणे
वापि आश्विने कार्तिके तथा । फाल्गुने मार्गशीर्षे वा
कुर्यान्मंत्रस्य दीक्षणम् ॥ सिद्धान्तशेखरे--शरत्काले च
वैशाखे दीक्षाश्रेष्ठफलप्रदा । फाल्गुने मार्गशीर्षे च ज्येष्ठे
दीक्षा तु मध्यमा ॥ आषाढे श्रावणे माघे कनिष्ठा
सद्भिराहृता । निन्दितश्चापि मासस्तु पौषो भाद्रपद-

स्तथा ॥ निंदितेष्वपि मासेषु दीक्षोक्ता ग्रहणे शुभा ॥ इतिमासनिर्णयः ॥ अथ तिथिनिर्णयः--पूर्णिमा पंचमी चैव द्वितीया सप्तमी तथा । त्रयोदशी च दशमी प्रशस्ताः सर्वकर्मदाः ॥ संग्रहे--द्वितीया पंचमी वापि षष्ठी चापि विशेषतः । द्वादश्यामपि कर्त्तव्यं त्रयोदश्यामथापि वा ॥ कुत्रचिन्निषिद्धत्वात् षष्ठीत्रयोदश्योर्मध्यमत्वम् । ग्रंथान्तरे षष्ठीभाद्रपदे मासि इषे कृष्णत्रयोदशी । कार्तिके नवमी शुक्ला श्रावणे कृष्णपंचमी॥एतानि देवपर्वाणि तीर्थकोटिफलानि च । कृष्णाष्टम्यां चतुर्दश्यां पंचपर्वदिने तथा॥ ग्रहणादौ व्यतीपाते परिवेषेन्दुसूर्ययोः । न वारमासदोषोऽस्ति ग्रहणे सूर्यचन्द्रयोः ॥ ग्रहणे देवदेवेशि कालः सप्तदिनावधि ॥ इति तिथिनिर्णयः॥अथ नक्षत्रनिर्णयः--अश्विनीरोहिणीस्वातीविशाखाहस्तभेषु च । ज्येष्ठोत्तरात्रयेष्वेव कुर्यान्मंत्राभिषेचनम् ॥ श्रवणार्द्रा धनिष्ठा च पुष्यः शतभिषस्तथा । दीक्षानक्षत्रजातानि ह्याहुस्तंत्रार्थकोविदाः ॥ इतिनक्षत्रनिर्णयः ॥

वारनिर्णयः–रवौ गुरौ विधौ दीक्षाकर्तव्या बुधशुक्रयोः॥ मंत्रारंभो रवौ शुक्रे बुधे जीवे विशेषतः। शनौ मृत्युः क्षयो भौमे सोमे सर्वं च निष्फलम्। इतिवचनात्सोमस्य मध्यमत्वम्॥ इति वारनिर्णयः॥ अथ दीक्षाकालनिर्णयः--गुरुशुक्रोदये शुद्धे लग्ने सद्वारशोधिते। चन्द्रतारानुकूले च ग्रहणे चंद्रसूर्ययोः॥ दीक्षा विधेया मंत्रज्ञैः पुरुषार्थप्रसिद्धये। न मासतिथिवारादिशोधनं सूर्यपर्वणि॥ ददातीष्टं च गृह्णीयात्तस्मिन् काले गुरोर्नरः। सिद्धिर्भवति मंत्रस्य विनाभ्यासेन कामतः॥ प्रबुद्धे बलसंयुक्ते शुक्रे देवगुरौ तथा। शुक्लपक्षे च कृष्णे वा दीक्षा सर्वशुभावहा॥ कालोत्तरे–मुक्तिकामैः कृष्णपक्षे भूतिकामैः सिते सदा। संहितायाम्–मेषकर्कटकन्यासु तुलायां वृश्चिके तथा। कुंभे च मकरे चैव दीक्षा सर्वशुभावहा॥ रुद्रयामले–सतीर्थेऽर्कविधुग्रासे तन्तूद्वहनपर्वणि॥ मंत्रदीक्षां प्रकुर्वाणो मासर्क्षादीन्न शोधयेत्। चैत्रे दमनकीं पूजां कृत्वा दीक्षां समाचरेत्॥ अष्टमी-

द्वादशी भूता चतुर्थी रविसप्तमी । श्रावणे तन्तुपूजां च कृत्वा संस्कारमाचरेत् ॥ आगमे च-सतीर्थेऽर्कविधुग्रासे पुण्यारण्ये वनेषु च ॥ पुण्यक्षेत्रे कुरुक्षेत्रे देवीपीठचतुष्टये ॥ प्रयागे श्रीगिरौ काश्यां कालाकालान्न शोधयेत्॥ तत्त्वसारसंहितायामपि--तीर्थं विनापि दीक्षायां विशेषं वत्सरं शृणु । दुर्लभे सद्गुरूणां च सकृत्संग उपस्थिते ॥ तदनुज्ञा यदा लब्धा स दीक्षावत्सरो महान् । ग्रामे वा यदि वारण्ये क्षेत्रे वा यदि वा निशि ॥ आगच्छति गुरुर्दैवाद्यदा दीक्षा तदा भवेत्॥ मुमुक्षुं प्रति न कालनियमः— निंद्यान्यपि च पर्वाणि प्रशस्तानि विमुक्तये । इतिप्रतिप्रसववचनात्॥वैशंपायनसंहितायाम्—संध्यागर्जितनिर्घोषभूकंपोल्कानिपातने । एतानन्यांश्च दिवसान्स्मृत्युक्तांश्च परित्यजेत्॥ इति कामिविषयम्। तदेवलग्नमितिसामान्यदीक्षाकालः ॥ अन्यत्र—त्रिरात्रमेवोपवसेदादितः सर्वकर्मणाम् ॥ त्रीणि नक्तानि वा कुर्यात्ततः कर्म समारभेत् ॥ इति च गायत्रीकल्पे । इति दीक्षाकालनिर्णयः ॥

अथ दीक्षानिर्णयः--अथ दीक्षां प्रवक्ष्यामि संक्षिप्तां गुरुसंमताम्। मुहूर्ते सर्वतो भद्रे नवकुंभं विधाय च॥ सोदकं गंधपुष्पाभ्यामर्चितं वस्त्रसंयुतम्। सर्वौषधीपंचरत्नपंचपल्लवसंयुतम् ॥ ततो देवार्चनं कृत्वा हुनेदष्टोत्तरं शतम् । शिष्यं स्वलंकृतं वेद्यामुपाग्निमुपवेशयेत् ॥ मंत्रितं प्रोक्षणीतोयैः शांतकुंभजलैस्तथा । मूलमंत्रेणाष्टशतं मंत्रितैरभिषेचयेत्॥ अथ संपादयन्मंत्रं हस्तं शिरसि धारयेत् । समेस्त्वीक्ष्य च तां दद्यादथ शिष्योऽर्चयेद्गुरुम्॥ अत्राप्यशक्तः कश्चिच्चेदब्जमभ्यर्च्य साक्षते। तदंबुनाभिषिंच्याथ तारमूलेन केकरम् ॥ निधायाथ जपेत्कर्णे उपदेशे त्वयं विधिः ॥ अथ पञ्चरत्नानि--मुक्ता १ विद्रुम २ माणिक्य ३ पुष्पराग ४ इंद्रनीलमणिः ५। अथ पंचपल्लवास्तु-अशोक १ आम्र २ पिप्पल ३ वट ४ वकुलाः ५। अथ सर्वौषधयः ॥ मुरामांसी वचा कुष्ठं शैलेयं रजनीद्वयम्।

१ शातकुम्भम्-सुवर्णकुम्भम् । सप्तकुंभजलैः इति च पाठः ।
२ उपदेशसुधायाम्-चन्द्रसूर्यग्रहे चैव सिद्धिक्षेत्रे शिवालये ॥ मंत्रमात्रप्रकथनमुपदेशः स उच्यते॥ ३ रजनी-हरिद्रा ।

चंपकं भद्रमुस्तं च सर्वौषधिगणः स्मृतः ॥ मंत्रग्रहणानंतरं शिष्यः—अष्टोत्तरशतं शिष्यः प्रजपेद्गुरुणोदितम् । अष्टाविंशतिवारं वा ह्यष्टकृत्वोऽथवा जपेत्॥ततः दक्षिणामात्मशक्त्या दद्यात्॥ तदावश्यकमितिवदन्ति । नारदीये-आचार्यादलब्धिप्राप्तो मंत्रश्चादत्तदक्षिणः । अभ्यस्तोऽपि सदा मंत्रः श्रेयसेनावकल्पते। ( दीक्षाप्रयोगस्तुमत्कृतदीक्षापद्धतौ द्रष्टव्यः )॥ इतिदीक्षानिर्णयः ॥ शिवः—अदीक्षिता ये कुर्वन्ति जपपूजादिकाः क्रियाः । निष्फलं तत्प्रिये तेषां शिलायामुप्तबीजवत् ॥ ग्रंथांतरे—चिकीर्षुर्दैवतोपास्तिमादौ भावि विचारयेत् । स्नानसंध्यादिकं कृत्वा स्मृत्वा हरिपदांबुजम् ॥ शयीत कुशशय्यायां प्रार्थयेद्वृषभध्वजम् । ॐ भगवन् देव देवेश शूलभृद्वृषवाहन ॥ इष्टानिष्टे समाचक्ष्व मम सुप्तस्य शाश्वत ॥ १ ॥ नमोऽजाय त्रिनेत्राय पिंगलाय महात्मने । भीमाय विश्वरूपाय स्वप्नाधिपतये नमः ॥ २ ॥ स्वप्ने कथय मे तथ्यं सर्वं कार्यमशेषतः । क्रियासिद्धिं विधास्यामि

त्वत्प्रसादान्महेश्वर ॥ ३ ॥ एभिर्मंत्रैः शिवं प्रार्थ्य निद्रां कुर्यान्निराकुलः । स्वप्नदृष्टं निशि प्रातः गुरवे विनिवेदयेत् ॥ तदंतरेण मंत्रज्ञः स्वयं चैव विचारयेत् ॥

इति पुरश्चरणदीपिकायां दीक्षाविधानाख्यो
द्वितीयः प्रकाशः ॥ २ ॥

---

अथारिमंत्रत्यागविधिः—अरिमन्त्रो गृहीतश्चेदज्ञानवशतस्तदा । तस्य त्यागस्तु कर्तव्यस्तत्प्रकारोऽधुनोच्यते ॥ सुदिने स्थापयेत्कुंभं सर्वतोभद्रमडण्ले । विलोमं स्वं जपन्मंत्रं पूरयेत्तं सुपायसा ॥ तत्र देवं समावाह्य यजेदावरणान्वितम् ॥ तदग्रे स्थण्डिलं कृत्वा प्रतिष्ठाप्यानलं ततः । जुहुयान्मूलमंत्रेण विलोमेन शतं घृतैः ॥ दिक्पतिभ्यो बलिं दद्यात्पायसान्नैर्घृतान्वितैः।पुनः संपूज्य देवेशं प्रार्थयेन्मनुनामुना ॥ ॐ आनुकूल्यमनालोच्य मया तरलबुद्धिना ॥ यदुपात्तं पूजितं च प्रभो मंत्रस्वरूपकम् ॥ तेन मे मनसः क्षोभमशेषं विनिवर्तय ॥ पापं प्रतिहतं चास्तु भूयाच्छ्रेयः सनातनम् ॥ तनोतु मम

कल्याणं पावनी भक्तिरस्तु मे ॥ एवं संप्रार्थ्य देवेशं कर्पूरागरुचन्दनैः॥विलोमं विलिखेन्मंत्रं तालपत्रे तमर्चयेत् । प्रबंध्य तं निजे मूर्ध्नि स्नायात्कुंभस्थितैर्जलैः॥पुनः संपूर्य सत्तोयैर्न पश्येन्मन्त्रयन्त्रकम्॥सम्पूज्य कुम्भंसरिति तडागे वा विनिक्षिपेत् ॥ विप्रान्सम्भोज्य मुच्येत पीडया स मनूत्थया ॥ इत्यरिमन्त्रत्यागविधिः ॥ यद्वा संग्रहे–एषु दोषेषु सर्वत्र मायां काममथापि वा । क्षिप्त्वा ह्यादौ श्रियं दद्यात्सर्वदोषविमुक्तये ॥ प्रणवो भुवनेशानि रमाबीजं मनोभवम् । जीवनं सर्वमंत्राणामित्याह भगवाञ्शिवः॥ लुप्तबीजाश्च ये मन्त्रा गोपालस्य क्वचित्क्वचित् । कामबीजं मुखे तेषां दद्यात्सर्वार्थसिद्धये ॥ श्रीबीजाद्यं यदा जप्यात्तदा लक्ष्मीरचञ्चला॥ कामाद्यं जपनादेव सर्वलोकं वशं नयेत् ॥ वागादिजपनादेतत् वाक्सिद्धिर्जायतेऽचिरात् ॥ शक्तिबीजादिको मन्त्रो निर्वाणमचिराद्दिशेत् ॥ पुटनात्प्रणवाभ्यां तु मोक्षमाप्नोति निश्चितम् ॥ एवं मंत्रवरं जप्त्वा किन्न साधयति मन्त्रवित् । इति॥मालिनीविजये

च--एकाक्षरे तथा कूटे त्रैपुरे मन्त्रनायके ॥स्त्रीदत्ते स्वप्नलब्धे च सिद्धादीन्नैव शोधयेत् ॥ मन्त्रसिद्धोपदिष्टेषु चतुराम्नायजेषु च ॥ मायामन्त्रे स्वप्रिये च सिद्धादीन्नैव शोधयेत् ॥ एकद्वित्र्यादिबीजस्य सिद्धादीन्नैव शोधयेत्॥ इति सिद्धादिविचारः ॥ अथो वै दशसंस्कारो मंत्राणां प्रोच्यते मया ॥ कर्मण्यतिजडा मन्त्रा मन्त्रिणां योजिता अपि ॥ तस्मात्तद्दोषनाशाय कर्तव्याः संस्क्रिया दश । तथा च शारदातिलके--मन्त्राणां दशसंस्काराः कथ्यन्ते सिद्धिदायिनः । जननं जीवनं पश्चात्ताडनं बोधनं तथा ॥ अथाभिषेको विमलीकरणाप्यायने पुनः । तर्पणं दीपनं गुप्तिश्चैताः स्युर्मंत्रसंस्क्रियाः ॥ अथ दशसंस्कारसंकल्पः-- ॥ अमुकस्य जप्तव्यामुकमन्त्रजन्यफलानुकूलमन्त्रनिष्ठसंस्कारप्राप्तिकामस्तस्य मन्त्रस्य जननादिदशसंस्कारान्करिष्यामीति संकल्पः ॥ प्रत्येकमेव संकल्प इति वदंति ॥ तेषां स्वरूपम्--मन्त्राणां मातृकामध्यादुद्धारो जननं स्मृतम् ॥ १ ॥ प्रणवान्तरितान्कृत्वा मन्त्र-

र्णांश्चापेत्सुधीः । एतज्जीवनमित्याहुर्मन्त्रतन्त्रविशारदाः ॥२॥ मंत्रवर्णान्समालिख्य ताडयेच्चन्दनांभसा ॥ प्रत्येकं वायुना मंत्री ताडनं तदुदाहृतम् ॥ ३ ॥ विलिख्य मन्त्रं तन्मंत्री प्रसूनैः करवीरजैः ॥ तन्मन्त्राक्षरसंख्यातैर्हन्यात्तेन बोधनम् ॥४॥ स्वतंत्रोक्तविधानेन मंत्रीमन्त्रार्णसंख्यया । अश्वत्थपल्लवैर्मन्त्रमभिषिंचे द्विशुद्धये॥५॥संचिंत्य मनसा मन्त्रं ज्योतिर्मन्त्रेण निर्दहेत् । मन्त्रे मलत्रयं मन्त्री विमलीकरणं त्विदम् ॥ तारं व्योमाग्निमनुयुग्दण्डीज्योतिर्मनुर्मन्तः (१) ॥६॥कुशोदकेन जलेन प्रत्यर्णं प्रोक्षणं मनोः ।तेन मन्त्रेण विधिवदेतदाप्यायनं मतम्॥७॥ मन्त्रेण वारिणा मन्त्रे तर्पणं तर्पणं स्मृतम् ॥ तारमायारमायोगो मनोर्दीपनमुच्यते ॥८॥ जप्यमानस्य मन्त्रस्य गोपनं त्वप्रकाशनम्॥ संस्कारा दश ते प्रोक्ताः सर्वतन्त्रेषु गोपिताः ॥ ९ ॥ यान्कृत्वा संप्रदायेन मन्त्री वांछितमश्नुते ॥ एवं दशसंस्कारान् कृत्वा मूलमन्त्रं ताम्बूलपत्रे

भूर्जपत्रे वा लिखित्वा कण्ठे वा दक्षिणहस्ते वा धारयेत्॥ इति दशसंस्कारा मंत्रस्य ॥

इति पुरश्चरणदीपिकायामरिमन्त्रत्यागादिविधा-
नाख्यस्तृतीयः प्रकाशः ॥ ३ ॥

## अथ जपस्थानानि ।

नारदीये—शिवस्य सन्निधाने च सूर्याग्न्योर्वा गुरोरपि । दीपस्य ज्वलितस्यापि जपकर्म प्रशस्यते ॥ गृहे जपं समं विद्याद्गोष्ठे शतगुणं भवेत्। नद्यां शतसहस्रं स्यादनन्तं शिवसन्निधौ ॥ समुद्रतीरे च ह्रदे गिरौ देवालयेषु च । पुण्याश्रमेषु सर्वेषु जपं कोटिगुणं भवेत्॥ तत्पूर्वाभिमुखो वश्यो दक्षिणे चाभिचारिकम् । पश्चिमे धनदं विद्यादुत्तरे शांतिदं भवेत् ॥ अन्यच्च—अग्रे पृष्ठे तथा वामे समीपे गर्भमन्दिरे । जपं प्रदक्षिणं होमं न कुर्याद्धि शिवालये ॥ इतिजपस्थानानि ॥ इत्यादि स्थानमाश्रित्य दीपस्थानं विचिंतयेत् । कूर्मस्यैव मुखं विद्धि दीपस्थानं सुसिद्धिदम् ॥ तद्यथा—“चतुरस्रं भुवं भित्त्वा कोष्ठानां नवकं लिखेत्। पूर्वकोष्ठादि विलिखेत्सप्तवर्गाननुक्रमात्॥

लक्षावधिक्षे मध्यकोष्ठे स्वरान्युग्मक्रमाल्लिखेत्। दिक्षु सर्वादितो यत्र ग्रामस्याद्यक्षरं भवेत्॥मुखं तदास्य जानीयाद्धस्तावुभयतःस्थितौ।कोष्ठे कुक्षी उभे पादौ द्वौ शिष्टं पुच्छमीरितम्॥ कूर्मचक्रमिदं प्रोक्तं मंत्राणां सिद्धिसाधनम् ।




मुखस्थो लभते सिद्धिं करस्थः स्वल्पभोगभाक्॥
कुक्षिस्थित उदासीनः पादस्थो दुःखमाप्नुयात् ।
पुच्छस्थं पीडितो मन्त्री बन्धनोच्चाटनादिभिः ॥
दीपस्थानं ततः क्षेत्रे कृत्वा मंत्री शुचिर्जपेत् ॥ क्षेत्र-

साधकमंत्राणामेकमेवाद्यमक्षरम्॥ यदि स्यात्स ध्रुवं मंत्रः क्षिप्रमेव प्रसिध्यति। इति श्रीविद्यारण्यचरणाः॥ ग्रथांतरे-युग्मं स्वराणां विलिखेच्च पूर्वं कादींश्च वर्गान्क्रमशः क्षमीशे। स्थानाधिपस्याक्षरमस्ति यत्र तं दीपदेशं मुनयो वदन्ति॥ देवीयामले-कुरुक्षेत्रे प्रयागे च गंगासागरसंगमे। महाकाले च काश्यां च कूर्मस्थानं न चिंतयेत्॥इति॥विश्वामित्रकल्पे-काशीपुरी च केदारो महाकालोऽथ नासिकम्। त्र्यंबकं च महाक्षेत्रं पंचदीपा इमे भुवि। एतेषु सर्वतो दीपाः कूर्मासनमितस्ततः॥ इति दीपचक्रम्॥ आसन विचारः-वंशाश्मधरणीदारुतृणपल्लवनिर्मितम्। वर्जयेदासनं धीमान् दारिद्र्यव्याधिदुःखदम्॥ तूलकंबलवस्त्राणि पट्टव्याघ्रमृगाजिनम्। कल्पयेदासनं धीमान्सौभाग्यज्ञानसिद्धिदम्। वंशासने दरिद्रत्वं पाषाणे व्याधिसंभवः॥ धरण्यां स्याद्दुःखभीतिर्दौर्भाग्यं दारुकासने। तूलके च यशोहानिः पल्लवे चित्तविभ्रमः॥कृष्णाजिने ज्ञानसिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि।स्यात्पौष्टिकं च कौशेयं शांतिकं वेत्रवि-

श्चरम् ॥ वंशासने व्याधिनाशः कंबले दुःखमोचनम् । स्यादाभिचारिकं नीले रक्ते वश्यादिकं भवेत् ॥ धवले शांतिकं मोक्षः सर्वार्थश्चित्रकंबले । सर्वाभावे त्वासनार्थं कुशविष्टरमिष्यते ॥ इत्यासनानि ॥ अथ जपमाला ॥ मंत्रखंडे—स्फाटिकी मौक्तिकी वापि प्रोक्तव्या सितसूत्रकैः। सर्वकर्मसमृद्ध्यर्थं जपेद्रुद्राक्षमालया ॥ धर्मार्थकाममोक्षार्थं जपेत्पद्माक्षमालया ॥ अरिष्टपुत्रजीवैश्च शंखपद्मौ मणिस्तथा । कुशग्रंथिश्च रुद्राक्ष उत्तमं चोत्तरोत्तरम् ॥ अन्यत्रापि—रुद्राक्षं श्वेतपद्माक्षमाले तु अखिले जपेत् । अतिस्थूलोऽतिसूक्ष्मश्च स्फुटितो भंगुरिर्लघुः ॥ भिन्नः पुरा धृतो जीर्णो रुद्राक्षो न वरः स्मृतः। करमाला ॥ उक्तं च—अलाभे जपमालायाः करशाखासु पर्वभिः ॥ अनामिकाया यो मध्यस्तस्मादधः क्रमेण तु ॥ मध्यांगुल्यग्रपर्वादिभादक्षिण्यक्रमेण तु । तर्जन्यादौ जपान्तश्च अक्षमाला करे स्थिता ॥ अंगुल्यग्रेषु यज्जप्तं यज्जप्तं मेरुलंघने । असंख्यातं तु यज्जप्तं तत्सर्वं निष्फलं भवेत् ॥

मध्यमादिद्वयं पर्व जपकाले तु वर्जयेत् । पर्व मेरुं विजानीयात्तस्मात्तत्परिवर्जयेत्॥ अथवा करशाखाभिः कर्तव्यो जापकैर्जपः। अंगुल्या जपसंख्यानामेव(क)मेवमुदाहृततम् ॥ रेखयाष्टगुणं विद्यात्पुत्रजीवैर्दश स्मृतम् । शतं चंदनशंखैश्च प्रवालैस्तु सहस्रकम् ॥ स्फाटिकैर्लक्षसाहस्रं मौक्तिकैर्लक्षमेव च । दशलक्षं राजताक्षैः सौवर्णैः कोटिरुच्यते ॥ कुशग्रंथ्या च रुद्राक्षैरनंतगुणितो भवेत्॥ अथ जपमालामणिसंख्या—अष्टोत्तरशतैर्माला पंचाशच्चतुराधिकैः । सप्तविंशतिभिः कार्या एकग्रीवासमेरुका॥ मुखं मुखेन संयोज्यपुच्छं पुच्छेन योजयेत्।प्रोतव्या सितसूत्रेण सत्कर्मफलसिद्धये॥पट्टसूत्रकृतामाला देव्याःप्रीतिकरा मता।कार्पासैर्वैष्णवीमाला पद्मसूत्रैरथापि वा॥ऊर्णाभिर्वल्कलैर्वापि शैवी माला प्रकीर्तिता । कार्पाससूत्रैरन्येषां विदध्याज्जपमालिकाः ॥ कामनायां विशेषः—त्रिंशद्भिः स्याद्धनं पुष्टिः सप्तविंशतिभिर्भवेत् । पंचविंशतिभिर्मोक्षे पञ्चदश्याभिचारिकैः ॥ पञ्चाशद्भिः कुलेशानि

सर्वसिद्धिरुदाहृता । श्रीशिवज्ञानविद्यायामपि—अङ्गुष्ठं मोक्षदं विद्यात्तर्ज्जनी शत्रुनाशिनी। मध्यमा धनदा शांतिकरा त्वेषा ह्यनामिका॥कनिष्ठाऽऽकर्षणे शस्ता जपकर्मणि शोभने । अंगुष्ठेन जपं जप्यमन्यैरंगुलिभिः सह ॥ अंगुष्ठेन विना कर्म कृतं तदफलं यतः॥ मोक्षार्थं पञ्चविंशत्या सप्त विंशतिपौष्टिके । त्रिंशच्च धनसंपत्त्यै पञ्चदश्याभिचारिकम् ॥ जप्त्वाक्षमालां सकलां भ्रामयेदाशिखामणिम् । प्रदक्षिणं पुनर्वक्त्रे प्रारभ्यैवं समाचरेत् ॥ स्वयं वामेन हस्तेन जपमालां न संस्पृशेत् । अदीक्षितो द्विजो वापि स्पृष्टश्चेच्छुद्धिमाप्नुयात् ॥ न धारयेत्करे मूर्ध्नि कंठे च जपमालिकाम् । जपकाले जपं कृत्वा सदा शुद्धे स्थले क्षिपेत्॥ गुरुं प्रकाशयेद्धीमान्मंत्रं नैव प्रकाशयेत् । अक्षमालां च मुद्रां च गुरोरपि न दर्शयेत् ॥ अन्यच्च—कंपनात्सिद्धिहानिः स्याद्धूननं बहुदुःखकृत् । शब्दे जाते भवेद्रोगो करभ्रष्टा विनाशकृत् ॥ छिन्ने सूत्रे भवेन्मृत्युस्तस्माद्यत्नपरो भवेत्।जपान्ते कर्णदेशे वा उच्चस्थानेऽथवा

न्यसेत्॥अक्षमाला द्विधा प्रोक्ता कल्पिताकल्पितेति च। कल्पिता मणिभिःक्लृप्ता मातृका स्यादकल्पिता॥आदि-क्षांताक्षरैः प्रोक्ता माला वर्णमयी बुधैः। अनुलोमविलो-माभ्यां गणयेन्मंत्रवित्तमः॥ जपमालां विधायेत्थं ततः संस्कारमाचरेत्॥ मालासंस्काराः—क्षालयेत्पंचगव्येन सद्योजातेन सज्जलैः॥ चंदनागरुगंधाद्यैर्वामदेवेन घर्ष-येत्। धूपयेत्तामघोरेण लेपयेत्पुरुषेण तु॥ मन्त्र-येत्पंचमेनैव प्रत्येकं तु शतंशतम्। मेरुं च पञ्चमेनैव तथा मन्त्रेण मन्त्रयेत्॥ येन प्रतिष्ठिता माला तमेव तु मनुं जपेत्।अन्यमंत्रजपाद्विद्वान्न कार्या कर्हिचिद्बुधैः॥इति।

प्रकारांतरे॥ ईश्वर उवाच--प्रक्षाल्य पंचगव्येन क्षमा पंचामृतेन च॥ संस्नाप्य पंचगव्येन शिवकुम्भस्थितेन च॥ सर्वं वै मूलमन्त्रेण गन्धपुष्पाक्षतादिभिः। धूपदीप-नैवेद्यादि दत्त्वा चाष्टशतं स्पृशेत्॥मूलमन्त्रं जपेत्पश्चाद्दण्ड-वत्प्रणमेद्बुधः। एवं या संस्कृता माला जपकर्मणि सर्वदा॥ अभीष्टफलदात्यर्थं सा सर्वाघविनाशिनी।

मध्यमानामिकांगुष्ठैरक्षमालामणीशतैः ॥ एवं जपस्य चैकस्य क्रमोऽयं चालयेज्जपेत्। अंगुष्ठेन तु मोक्षाय मध्यमायुर्विवृद्धये॥जपेदनामिकांगुष्ठैर्नेतराभ्यां कदाचन।इति॥ ग्रंथांतरेतु--अंगुष्ठमध्यमायोगात् सर्वसिद्धिप्रदा मता । इत्यक्षमाला॥ अथ भक्ष्याभक्ष्यविचारः ॥ गौतमीये—चरुमूलफलक्षीरदधिभिक्षान्नसक्तवः । शाकश्चाष्टविधं चान्नं साधकस्योच्यते बुधैः॥नारदीये—मृदु कोष्णं सुपक्वं च कुर्याद्वै लघुभोजनम् ॥नेन्द्रियाणां विकारः स्यात्तथा भुञ्जीत साधकः॥ यद्वा तद्वा परित्याज्यं दुष्टान्नं कुत्सितं फलम् । प्रशस्तान्नं समश्नीयान्मन्त्रसिद्धिसमीहया ॥ पयोव्रते तु विशेषः—पयोव्रतस्य सिद्धिः स्याल्लक्षेनैव न संशयः । शाकभैक्ष्यहविष्याशी कलौ लक्षत्रयं जपेत् ॥ भिक्षान्नं तु न गृहिणः ॥ यतिश्च ब्रह्मचारी च भिक्षान्नजीविनावुभौ ॥ सर्वधर्मवहिर्भूतो गृही भिक्षान्नजीवनात् । विधवा विधुरश्चापि स्नातकश्च परित्यजेत् ॥ इति भक्ष्याभक्ष्यम् ॥ अथ नियमः--लवणं पललं चैव क्षारं

क्षौद्रं रसान्तरम् । माषमुद्गमसूराद्याः कोद्रवांश्चणकानपि ॥ असद्भाषणमन्याय्यं वर्जयेदन्यपूजनम् । विनाश्रमोचितं किञ्चिन्नित्यनैमित्तिकं चरेत्—स्त्रीशूद्रपतितव्रात्यनास्तिकोच्छिष्टभाषणम् । असत्यभाषणं चैव कौटिल्यं च परित्यजेत्॥ न शुद्धैरपि भाषेत जपहोमार्चनादिषु । वाग्यतः कर्म निर्वर्त्य निस्पृहो वार्तितादिषु ॥ वर्जयेद्गीतकाव्यादिश्रवणं नृत्यदर्शनम् । परान्नं च परद्रव्यं तथैव तु प्रतिग्रहः ॥ परस्त्रीं परनिन्दां च मनसापि विवर्जयेत् । जिह्वा दग्धा परान्नेन करौ दग्धौ प्रतिग्रहात्॥ मनोदग्धं परस्त्रीभिः कथं सिद्धिर्वरानने। ताम्बूलं गन्धलेपं च पुष्पधारणमेव च ॥ मैथुनं तत्कथालापं तद्गोष्ठीः परिवर्जयेत् । कौटिल्यं क्षौद्रमभ्यङ्गमनिवेदितभोजनम् ॥ असंकल्पितकृत्यं च वर्जयेन्मर्दनादिकम् । स्नायाच्च पंचगव्येन केवलामलकेन वा ॥ श्रुतिस्मृतिपुराणोक्तैर्मंत्रैः स्नायान्निरन्तरम् । स्नानं त्रिषवणं प्रोक्तमशक्तौ द्विःसकृत्तथा । अस्नातस्य फलं नास्ति न चातर्पयतः पितॄन् ॥

स्वजप्यमंत्रेण तु कुंभमुद्रया निमज्जनस्यानुपदंस्वमस्तके ।
सदाष्टविंशत्यभिषेकमाचरेत्तथाष्टजप्त्वाचमनं च संततम् ॥

इति पुरश्चरणदीपिकायां जपस्थानादिनियमाख्य-
श्चतुर्थः प्रकाशः ॥

---

अथ जपविधानम्—तत्र शुभे दिने नदीपर्वतमस्त-कादौ क्षेत्रं परिकल्प्य क्षेत्रपालपूजां विधाय पूर्वोक्तदीपस्थानमाश्रित्य जपमारभेत् ॥ तथा कौर्मे—"अद्रव्यपर्वतः पुण्यो नदीतीराणि यानि च । सर्वाण्यस्वामिकान्याहुर्न हि तेषु परिग्रहः ॥ ततोऽन्यत्र सुगृहं कुर्यात्" इति । तदुक्तं ग्रन्थान्तरे—एवं पूर्वसमीरितेन विधिना शक्त्या स्वयं सादरं संपाद्याखिलसाधनानि विधिवच्छ्रीसद्गुरोराज्ञया॥ न शनै र्न ह्यतिस्पृष्टं न द्रुतं न विलंबितम् । न न्यूनं नातिरिक्तं वा जपं कुर्याद्दिनेदिने॥जातस्वस्थ इतस्ततः सुविहिते स्वस्थासने भूगृहं कुर्यान्मंत्रमुदीरयान्निति

महानुष्ठानहेतोर्वशी ॥ गृहीतस्यास्य मंत्रस्य पुरश्चरण-सिद्धये ॥ मयेयं गृह्यते भूमिर्मन्त्रोऽयं सिध्यतामितिमन्त्रेण॥ ततो ज्ञाताज्ञातपापक्षयार्थं सहस्रपंचकं त्रयं वाष्टोत्तरसहस्रं वा गायत्रीं जपित्वा ब्रह्मणान् भोजनादिनाभ्यर्च्य गुरुं च वस्त्रालङ्कारादिभिस्ततो हविष्यान्ननैवेद्यभोजनं कुर्यात् ॥ कस्यचिन्मते उपवासः । उक्तं च सनत्कुमारकल्पे—विप्रान्संतर्पयेदन्नभोजनाच्छादनादिभिः । बहुभिर्वस्त्रभूषाभिः प्रणमेद्गुरुमात्मनः ॥ आरभेच्च जपं पश्चात्तदनुज्ञापुरःसरम् । इति पूर्वदिनकृत्यम् ॥ ततो जपारंभदिने स्नानादिकं विधाय दीपस्थाने गत्वा आसनविधिं च संपाद्य संकल्पं कुर्यात् ॥ तद्यथा—अद्येत्यादि पञ्चाङ्गं स्मृत्वामुकाक्षरामुकमन्त्रस्य सिद्धिकामोऽमुकसंख्याक-जपतत्तद्दशांशहोमतर्पणाभिषेकविप्रभोजनात्मकपुरश्चरण-महं करिष्ये॥ब्राह्मणद्वारा वा करिष्ये ॥इति संकल्प्य गणे-शपूजनं कृत्वामुकऋषिरमुकच्छन्दोमुकदेवतापुरश्चरण-जपे विनियोगः॥इत्युक्त्वाऋष्यादिन्यासान्ध्यानं च कृत्व

ॐ त्वं माले सर्वदेवानां सर्वसिद्धिप्रदा मता। तेन सत्येन मे सिद्धिं मातर्देहि नमोस्तु ते॥ इति जपमालां प्रार्थ्य हस्ते धृत्वा देवोहामिति भावयित्वा जपमारभेदितिपुरश्चरण-जपे दिवसातिक्रमो न कर्तव्यः। जपस्तु प्रत्यहं न न्यूनो नाधिकः न त्वरया न च विलम्बेन। किन्तु मध्यमवृत्त्या कार्यः। उक्तं च नारदीये—नैरन्तर्यविधिः प्रोक्तो न दिनं व्यतिलंघयेत्। दिवसातिक्रमे तेषां सिद्धिरोधः प्रजायते॥ मध्याह्नावधिश्च॥ उक्तं च चन्द्रिकायाम्—शिवादींश्च गुरुं नत्वा जपं कुर्यात्समाहितः। उक्तसंख्यामितं प्रातःकालान्मध्यन्दिनावधि॥ मानसः सिद्धिकामानां पुष्टि-कामैरुपांशुकः। वाचिको मारणे चैव प्रशस्तो जप ईरितः॥ शयनं दर्भशय्यायां शुचिः प्रयतमानसः। नैकवासा जपे-न्मन्त्रं बहुवस्त्राकुलो न च॥ गोभिलोऽपि—नार्द्रवासा जपं कुर्याद्धोमं दानं प्रतिग्रहम्। सर्वं तद्राक्षसं विद्याद्बहि-र्जानु च यत्कृतम्॥ अशुचिर्दर्शनेऽयुक्तो स्वयमप्यशुचिः पुनः। आचान्तः प्रयतोभूत्वा न्यासं पूर्ववदाचरेत्।

मौनेन जपं कुर्यात् ॥ तदुक्तं मणिसागरे—संध्ययोरुभयो-र्जाप्ये भोजने दन्तधावने । पितृकार्ये च दैवे च तथा मूत्रपुरीषयोः । गुरूणां सन्निधौ दाने योगे चैव विशेषतः॥ एषु मौनं समातिष्ठन्स्वर्गमाप्नोति मानवः । यदि मौनं नो-पचरेत्तदा प्रायश्चित्तम् । तदुक्तं ग्रन्थान्तरे—सकृदुच्चरिते शब्दे प्रणवं समुदीरयेत् ॥ अन्यच्च—जपध्यानसमायुक्तो मन्त्रः सिद्धयति नान्यथा । इति ॥ पुरश्चरणस्वरूपमु-च्यते—पूजा त्रैकालिकी नित्यं जपस्तर्पणमेव च । होमो ब्राह्मणभुक्तिश्च पुरश्चरणमुच्यते ॥ कुलार्णवे—पञ्चाङ्गानि महादेवि जपो होमश्च तर्पणम् । स्वाभिषेकश्च विप्रा-णामाराधनमपीश्वरि ॥ पूर्वपूर्वदशांशेन पुरश्चरणमुच्यते॥ स्कांदे—पूजया विपुलं राज्यं अग्नौ होमेन सम्पदः। जपेन पापसंशुद्धिर्ध्यानेन ज्ञानमुच्यते ॥ वसिष्ठसंहितायाम्—इषु-मात्रं स्थण्डिलं वा संक्षिप्ते होमकर्मणि । पिंगलामते—होमे प्रशस्यते कुण्डंस्थण्डिलं बाहुसंमितम् । इति॥वायवीय-संहितायाम्—कुण्डे वा स्थण्डिले वापि कूण्डे होमः प्रश-

स्यते । होमोक्तविधिना चैव कुर्याद्वै साधकोत्तमः ॥ कुण्डं तु नारदेनोक्तं हस्तमात्रं शुभं मतम् ॥ अथ होमकालः—वसंतश्चैव पूर्वाह्णे मध्याह्ने ग्रीष्म उच्यते।अपराह्णे भवेद्वर्षा शरच्चैवार्द्धरात्रिके॥उषो हेमन्तकश्चैव सन्ध्यायां शिशिरः स्मृतः । ग्रीष्मे उच्चाटनं कुर्यात्स्तंभनं प्रावृषि तथा ॥ शरदि शान्तिकं कुर्याद्धेमंते मोहनं कुरु । शिशिरे मारणं ज्ञेयं वसन्तो वश्यकर्मणि ॥ वह्निस्वरूपम्—बधिरत्वं कर्णहोमे नेत्रे त्वन्धत्वमाप्नुयात् । नासिकायां मनःपीडा शिरोहोमो हि मृत्युदः ॥ यतः काष्ठं ततः श्रोत्रं यतो धूमोऽथ नासिका । यतोऽल्पज्वलनं नेत्रं यतो भस्म ततः शिरः॥ यतः प्रज्वलितो वह्निस्तन्मुखं जातवेदसः । स्वर्णसिंदूरबालार्ककुंकुमक्षोदसन्निभः ॥ वह्निवर्णः शुभावह इति ॥ भेरिवारिदहस्तीनां ध्वनिर्वह्नेः शुभावहः । नागचंपकपुन्नागपाटलायूथिकानिभः ॥ गंधो वह्नेः शुभावहः । काकस्वरस्वरो वह्नेर्यजमानस्य दुःखदः ॥ कृष्टे कष्टगते वर्णे यजमानं विनाशयेत् । एवं

दुष्टेषु चिह्नेषु प्रायश्चित्तं समाचरेत् ॥ मूलेनाज्येन जुहुयात् पंचविंशतिमाहुतीः ॥ इतिवह्निस्वरूपम् । अथ होमद्रव्याणि॥प्रणवकल्पे वासिष्ठलैंगउपपुराणे—पालाशपुष्पहोमेन सर्वज्ञत्वमवाप्नुयात् । अश्वत्थस्य समिद्धोमाद्ब्राह्मण्यं सुस्थिरं भवेत् ॥ दूर्वाहोमादवाप्नोति दीर्घायुष्यं न संशयः। अन्नाज्यहोमादाप्नोति मुने राज्यं द्विजोत्तमः॥ कन्याकामो लभेत्कन्यां लाजाहोमेन सुव्रत। वैराग्यकामो वैराग्यं लभते घृतहोमतः॥ श्रियार्थी श्रियमाप्नोति बिल्वपत्रस्य होमतः। पुत्रकामो लभेत्पुत्रं जीवपुत्रस्य होमतः॥ आरोग्यकाम आरोग्यं लभते तिलहोमतः । यद्यदिच्छति तत्सर्वं लभते पुष्पहोमतः ॥ अन्यच्च—येषां जपे च होमे च संख्या नोक्ता महर्षिभिः । तेषामष्टसहस्राणि संख्योक्ता जपहोमयोः ॥ अर्णवे—कल्पोक्ता च कृते संख्या त्रेतायां द्विगुणा स्मृता। द्वापरे त्रिगुणा प्रोक्ता कलौ संख्या चतुर्गुणा ॥ सनत्कुमारेण च--स्वाहान्तेनैव मंत्रेण होमः कार्यो

१ जीवपुत्रः--बीजविशेषः ।

विजानता। संन्यासिनां न होमोस्ति न वा ब्राह्मणतर्पणम्। जपमात्रेण सिद्धिः स्यात्तर्पणाद्यं विकल्पितम् ॥ इति । तथा च गौतमीये—होमकर्मण्यशक्तानां विप्राणां द्विगुणो जपः । इतरेषां तु वर्णानां त्रिगुणादिर्विधीयते ॥ अथ होममुद्रा—होमे मुद्रा स्मृतास्तिस्रो मृगी हंसी च सूकरी। शान्तिके च मृगी ज्ञेया हंसी पौष्टिककर्मणि ॥ सूकरी ह्यभिचारेषु कार्या तन्त्रविदुत्तमैः । सूकरी कर-संकोची हंसी मुक्तकनिष्ठिका ॥ मुक्ता कनिष्ठा तर्जन्या मृगीमुद्रा प्रकीर्तिता । अभिचारादिहोमेषु सूकरी कथिता बुधैः॥सूकरी पुत्रकामाय धनकामाय हंसिनी। मृगी मोक्षे प्रकर्तव्या आहुतिः सर्वकामिका॥ हुतं यन्मु-द्रया हीनं तत्सर्वं निष्फलं भवेत् ॥ कश्चित्तु प्रत्यहं जपदशांशतर्पणमार्जने करोति, कश्चित् लक्षे पूर्णे । द्वावपि पक्षौ सांप्रदायिकौ। उक्तं च नारदीये—स्वजपस्य दशांशेन होमं कुर्याद्दिनेदिने । अथवा लक्षपर्यंते होमः कार्यो विपश्चिता॥इति। अनन्तरं दशांशं तर्पणं मार्जनं च कुर्यात्॥

तत्र वैशंपायनः—तर्पणस्य दशांशेन नमोऽन्तं मन्त्रमुच्चरन्।
अभिषिंचेत्स मूर्धानं जलैः कुम्भाख्यमुद्रया ॥

इति पुरश्चरणदीपिकायांजपविधानाख्यः पञ्चमःप्रकाशः॥५॥

## अथ संक्षिप्तपुरश्चरणविधिः।

कृष्णाष्टमीं समारभ्य यावत्कृष्णचतुर्दशी। देवं ध्यात्वा जपेन्मंत्रमयुतानां चतुष्टयम् । दशांशं होमयेत्पश्चात्तर्पयेदभिषेचयेत् । ततः सिद्धो भवेन्मन्त्रश्चाब्रवीत्कुम्भसंभवः ॥ तद्यथा—पूर्वोक्तमासतिथ्यादौ अष्टम्यां स्नानादिकं कृत्वा जपस्थाने आसनविधिं च कृत्वा संकल्पं कुर्यात् । अद्येत्यादि अमुकाक्षरामुकमन्त्रस्य सिद्धिकामः अयुतचतुष्टयसंख्याकजपं तद्दशांशहोमं तद्दशांशतर्पणं तद्दशांशाभिषेकात्मकपुरश्चरणमहं करिष्ये। तत्राष्टम्यादिचतुर्दशीपर्यंतं प्रतिदिनं पञ्चसहस्रम् । सप्तशतं चतुर्दशसंख्याकं चतुर्दशस्थाने षोडशसंख्याकं जपमहं करिष्ये। इति संकल्प्य न्यासादिकं च कृत्वा जपं कुर्यात्। जपान्ते होमादिकं च।अथवान्यप्रकारेण पुरश्चरणमुच्यते॥

ग्रहणेऽर्कस्य चन्द्रस्य शुचिः पूर्वमुपोषितः । नद्यां समुद्र-
गामिन्यां नाभिमात्राम्भसि स्थितः॥ स्पर्शाद्विमुक्तिपर्यन्तं
जपेन्मंत्रं समाहितः । तावत्कालं जपित्वा तु होमादिकं
समाचरेत् । इतिकल्पप्रकाशतंत्रे उक्तम् ॥पूर्वदिने उपवास-
मेकभुक्तं वा कुर्यात् । कुलार्णवे ॥ अन्नैश्चतुर्विधैर्दीवि
पदार्थैः षड्रसान्वितैः । संभोजितेषु विप्रेषु सर्वं हि सफलं
भवेत् ॥ सम्यक्सिद्धैकमंत्रस्य पंचाङ्गोपासनेन च । सर्वे
मंत्राश्च सिध्यन्ति तत्प्रभावात्कुलेश्वरि॥ गुरुं विना मंत्र-
जपे दोषश्रवण एव च ॥ अर्णवे--यदृच्छया श्रुतं मंत्रं
छद्मनापि बलेन वा॥प्रेरि(ति)तं वाथ गाथादौ यज्जपेत्तदन-
र्थकृत् । पुस्तके लिखितान्मन्त्रानालोक्य प्रजपन्ति ये ॥
ब्रह्महत्यासमं तेषां पातकं परिकीर्तितम् ॥ ग्रन्थान्तरे—
आवाह्य देवतामेकामर्चयेच्चान्यदेवताम् । उभाभ्यां लभते
शापं मन्त्री चञ्चलमानसः ॥ अन्यच्च—प्रवासी बहुभक्षी
च प्रजल्पो हीन्द्रियग्रहः। नीचसंगाच्च लौल्याच्च षड्भि-
र्मंत्रो न सिध्यति ॥ अथवा देवतारूपं गुरुं ध्यात्वा ततो

यजेत् । पुरश्चरणहीनोऽपि मन्त्रः सिध्येन्न संशयः ॥ श्रीभगवानपि–संतुष्टो हि गुरुर्यस्य तस्य तुष्टं जगत्त्रयम् । नास्य साध्यं जगत्यत्र सुप्रसन्ने गुरौ मुने ॥ एवं पुरश्चरणं कृत्वा गुरुदेवतामभिवन्द्य वित्तादिना शुश्रूषया विद्यां जपेत् ॥ एतत्कर्मपरिसमाप्तौ कल्पोक्तान् ब्राह्मणान् भोजयित्वा अन्यानि प्रयोजनानि साधयेदिति ॥

इति श्रीमद्भट्टोपनामककाशीनाथेन विरचिता
पुरश्चरणदीपिका समाप्ता ॥

---

समाप्तोऽयं ग्रन्थः ॥



## पुस्तकें मिलने के स्थान

१) खेमराज श्रीकृष्णदास,
श्रीवेंकटेश्वर स्टीम प्रेस,
खेमराज श्रीकृष्णदास मार्ग
खेतवाडी, मुंबई ४००००४

२) खेमराज श्रीकृष्णदास,
६६, हडपसर इण्डस्ट्रिअल इस्टेट
पुणे - ४११०१३

३) गंगाविष्णु श्रीकृष्णदास,
लक्ष्मीवेंकटेश्वर स्टीम प्रेस,
व बुक डिपो,
अहिल्याबाई चौक, कल्याण
(जि.ठाणे- महाराष्ट्र)

४) खेमराज श्रीकृष्णदास
चौक - वाराणसी (उ. प्र.)

